*प्रथम संस्कृत संस्करण :* अगस्त 2015 श्रावण 1937
*पुनर्मुद्रण :* जुलाई 2020 श्रावण 1942


PD 153T RPS

**पुस्तकमाला निर्माण समिति**

कंचन सेठी, कृष्ण कुमार, ज्योति सेठी, टुलटुल विश्वास, मुकेश मालवीय, राधिका मेनन, शालिनी शर्मा, लता पाण्डे (स्वर्गीय), स्वाति वर्मा, सारिका वशिष्ठ, सीमा कुमारी, सोनिका कौशिक, सुशील शुक्ल

**सदस्य-समन्वयक** – लतिका गुप्ता

**संपादक ( संस्कृत )** – कृष्णचन्द्र त्रिपाठी

**संस्कृत अनुवाद** – रणजित बेहेरा, भाषा शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

**चित्रांकन, सज्जा तथा आवरण–** निधि वाधवा

**संस्कृत समीक्षा समिति**

यज्ञ दत्त शर्मा, सेवानिवृत *प्रोफ़ेसर संस्कृत,* दिल्ली विश्वविद्यालय, दिल्ली; कृष्ण चन्द्र त्रिपाठी, *प्रोफ़ेसर संस्कृत,* भाषा शिक्षा विभाग, एन.सी.ई.आर.टी. नई दिल्ली; राजेश्वर प्रसाद मिश्र, *प्रोफ़ेसर संस्कृत,* संस्कृत पालि एवं प्राकृत विभाग, कुरुक्षेत्र विश्वविद्यालय, हरियाणा; भागीरथी नन्द, *एसोसिएट प्रोफ़ेसर,* साहित्य विभाग, श्री लाल बहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठ, कटवारिया सराय, नई दिल्ली; पतञ्जलि कुमार भाटिया, *अध्यक्ष,* संस्कृत विभाग, पी.जी.डी.ए.वी. कॉलेज, दिल्ली विश्वविद्यालय, नई दिल्ली; सूर्य नारायण नन्द, *अतिथि अध्यापक,* सेंट स्टीफेन्स कॉलेज, दिल्ली विश्वविद्यालय, दिल्ली; हरेकृष्ण अगस्ति, *असिस्टेंट प्रोफ़ेसर,* व्याकरण विभाग, कवि कुलगुरु कालिदास संस्कृत विश्वविद्यालय, नागपुर, महाराष्ट्र; सुगन्ध पाण्डेय, *टी.जी.टी. संस्कृत,* केन्द्रीय विद्यालय, काशीपुर, ऊधम सिंह नगर, उत्तराखण्ड; निर्मल मिश्र, *टी.जी.टी. संस्कृत,* केन्द्रीय विद्यालय, नरेला, दिल्ली; डॉ. जतीन्द्र मोहन मिश्र, *सह आचार्य,* भाषा शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

**आभार ज्ञापन**

प्रो. बी.के.त्रिपाठी, *निदेशक,* एन.सी.ई.आर.टी., नई दिल्ली; कृष्ण कुमार, *पूर्व-निदेशक,* एन.सी.ई.आर.टी., नई दिल्ली; वसुधा कामथ, *पूर्व-संयुक्त-निदेशक,* केन्द्रीय शैक्षिक प्रोद्योगिकी संस्थान, एन.सी.ई.आर.टी., नई दिल्ली; उमा शंकर शर्मा ऋषि, *पूर्व विभागाध्यक्ष,* संस्कृत विभाग, पटना विश्वविद्यालय, पटना, बिहार; के. के. वशिष्ठ, *पूर्व-विभागाध्यक्ष,* प्रारंभिक शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

80 जी.एस.एम. पेपर पर मुद्रित

सचिव, राष्ट्रीय शैक्षिक अनुसंधान और प्रशिक्षण परिषद्, श्री अरविन्द मार्ग, नयी दिल्ली 110016 द्वारा प्रकाशन प्रभाग में प्रकाशित तथा डी. के. प्रिंटर्स, 5/16, कीर्ति नगर औद्योगिक क्षेत्र, नयी दिल्ली 110 015 द्वारा मुद्रित।

ISBN 978-93-5007-353-7 (वर्षा-सैट)
978-93-5007-383-4

वर्षा-क्रमिक-पुस्तकमाला प्राथमिककक्षाया: बालानां कृते वर्तते। अस्या: अभिप्राय: – 'बोधनेन सह' स्वयंपठनस्य अवसरपरिकल्पनं वर्तते। अस्या: पुस्तकमालाया: कथा: चतुर्षु स्तरेषु पञ्चसु कथावस्तुषु च विभक्ता: सन्ति। 'वर्षा' बालानाम् सानन्दं पठने स्थायिपाठकत्वेन निर्माणे च सहायिका भविष्यति। बालेभ्य: दैनन्दिन्य: लघुलघुघटना: कथा इव रुचिकरा: प्रतीयन्ते। अत: वर्षा-मालिकाया: सर्वा: कथा: दैनिकजीवनस्य अनुभवान् आधृत्य वर्तन्ते। लघुबालानां पठनाय प्रचुरमात्रायां पुस्तकानि उपलब्धानि स्युरिति अस्या: पुस्तकमालाया: अपरमुद्देश्यं वर्तते।

वर्षा-पुस्तकमाला बालानां पठन-शिक्षणे, स्थायिपाठकनिर्माणे, सूचनासंग्रहणे पाठ्यचर्याया: प्रत्येकं क्षेत्रे च सहायिका भविष्यति। शिक्षका: वर्षा-मालिकां कक्षायाम् तथा स्थापयेयु: येन बाला: सुखेन पुस्तकानि ग्रहीतुं शक्नुयु:।



**एन.सी.ई.आर.टी. के प्रकाशन प्रभाग के कार्यालय**

- एन.सी.ई.आर.टी. कैंपस, श्री अरविंद मार्ग, नयी दिल्ली 110 016 **फोन** : 011-26562708
- 108, 100 फीट रोड, हेली एक्सटेंशन, होस्डेकेरे, बनाशंकरी III स्टेज, बंगलूरु 560 085 **फोन** : 080-26725740
- नवजीवन ट्रस्ट भवन, डाकघर नवजीवन, अहमदाबाद 380 014 **फोन** : 079-27541446
- सी.डब्ल्यू.सी. कैंपस, निकट: धनकल बस स्टॉप पनिहटी, कोलकाता 700 114 **फोन** : 033-25530454
- सी.डब्ल्यू.सी. कॉम्प्लैक्स, मालीगाँव, गुवाहाटी 781 021 **फोन** : 0361-2674869

**प्रकाशन सहयोग**

अध्यक्ष, प्रकाशन प्रभाग : *अनूप कुमार राजपूत*
मुख्य उत्पादन अधिकारी : *अरुण चितकारा*
मुख्य संपादक : *श्वेता उप्पल*
मुख्य व्यापार प्रबंधक : *विपिन दिवान*

# गोलगप्पकम्





मदनः                    जमालः








एकस्मिन् दिवसे माता जमालाय पञ्च रुप्यकाणि दत्तवती।
जमालः शाकशोधने मातुः साहाय्यं कृतवान् आसीत्।
माता जमाले अतिप्रसन्ना आसीत्।





जमालः मदनं नीत्वा विपणिं गतवान्।
विपणौ गोलगप्पकानाम् एकः आपणः आसीत्।
उभौ सदा तत्रैव गोलगप्पकानि खादतः स्म।






गोलगप्पकानाम् आपणे मदनः पुटक–द्वयम् अयाचत। गोलगप्पक–विक्रेता अन्यान् जनान् भोजयति स्म। जमालः खादतः जनान् अपश्यत्।



जमालस्य मनः गोलगप्पक–खादनाय व्यग्रम् अभवत्।
शुण्ठिकायाः लेहनार्थं तस्य इच्छा अभवत्।
लोलुपात् जमालस्य मुखं लालायुक्तं जातम्।






गोलगप्पक–विक्रेता ताभ्याम् एकम् एकं पुटकं दत्तवान्।
जमालः शुण्ठिका–युतानि गोलगप्पकानि याचितवान्।
मदनः अवदत् – “सः शुण्ठिकां न इच्छति।”




गोलगप्पकानि बृहदाकाराणि आसन्।
जमालः गोलगप्पकं खादितुं मुखं अतितरम् उद्घाटितवान्।
तस्य मुखं गोलगप्पकेन जलेन च पूर्णम् अभवत्।



भङ्गुरैः गोलगप्पकैः जमालस्य मुखात् ध्वनिः उद्भूतः।
तदनन्तरं मुखे आम्ल–मधुरं जलं मिश्रितम्।
जमालः मुखेन उच्चैः चटत्कारम् अकरोत्।



मुखे गोलगप्पके क्षिप्ते सति तस्य नेत्रे निमीलिते अभवताम्।
जमालः जलं स्वदते स्म।
तस्मै आम्लं, मधुरं, तिक्तं लवण-मिश्रित-जलं च रोचते स्म।







मदनाय अम्ल-जलम् अधिकं रोचते स्म।
जलस्य तिक्त-स्वादेन सः भृशं हृष्यति स्म।
गोलगप्पके खादिते सति तस्य नेत्रे अपि निमीलिते भवतः स्म।



पञ्च गोलगप्पकानि खादित्वा जमालः क्षणं यावत् विरतः।
सः रुप्यकाणां विषये अचिन्तयत्।
तस्य पार्श्वे केवलं पञ्च रुप्यकाणि आसन्।







तदैव गोलगप्पक–विक्रेता अपरम् एकं गोलगप्पकम् अयच्छत्।
जमालः न निवारितवान्।
सः पुनः गोलगप्पकानि खादितुम् आरभत।




मदनः जमालं प्रति अपश्यत्।
स नेत्राभ्यां रुप्यकाणां विषये सङ्केतितवान्।
जमालः चटत्करणे मग्नः आसीत्।





मदनः अपि विरतः न अभवत्।
सः अपि गोलगप्पकानां खादने संयुतः आसीत्।
सः गोलगप्पक–विक्रेतारं जले अम्लं वर्धयितुम् अवदत्।





उभौ बहूनि गोलगप्पकानि अखादताम्।
जमालः भृशं तिक्तताम् अनुभवति स्म।
मदनः ततः अपि अधिकतरां तिक्तताम् अनुभवति स्म।





उभौ गोलगप्पक-विक्रेत्रे पञ्च रुप्यकाणि दत्तवन्तौ।
रुप्यक-द्वयं न्यूनम् आसीत्।
गोलगप्पक-विक्रेता उक्तवान् - "अग्रिमे वारे देयम्।"

